(मं० ५ सू० ७३.)

## १७.

यदद्य स्थः परावति यदर्वावत्यश्विना। यद्वा पुरू पुरुभुजा यदंतरिक्ष आ गतं ॥ १ ॥

यत्। अद्य। स्थः। पराऽवति। यत्। अर्वाऽवति। अश्विना॥ यत्। वा। पुरु। पुरुऽभुजा। यत्। अंतरिक्षे। आ। गतं॥ १॥

हे पुरुभुजा बहुषु यज्ञेषु भोक्तारावधिकं रक्षितारौ वा हे अश्विना यदद्यास्मिन् काले परावत्यत्यंतं दूरदेशे द्युलोके स्थो भवथः। यद्वा अर्वावत्यरणवति गंतुं शक्ये प्रदेशेऽतिके स्थः। यद्यदि वा अथवा पुरु बहुप्रदेशेषु स्थः। यद्यदि अंतरिक्षे स्थः तस्मात्सर्वस्मादद्यागतं आगच्छतं॥

इह त्या पुरुभूतमा पुरू दंसांसि बिभ्रता। वरस्या याम्यध्रिगू हुवे तुविष्टमा भुजे॥ २॥

इह। त्या। पुरुऽभूतमा। पुरु। दंसांसि। बिभ्रता। वरस्या। यामि। अध्रिगू इत्यध्रिऽगू। हुवे। तुविःऽतमा। भुजे॥ २॥

इहास्मिन्यज्ञे त्या तौ पुरुभूतमा पुरूणां बहूनां यजमानानां भावयितृतमौ पुरु पुरूणि दंसांसि कर्माणि बिभ्रता धारयंतौ वरस्या वरणीयावध्रिगू अन्यैरधृतगमनकर्माणौ यामि उपागच्छामि। तुविष्टमा प्रभूततमौ भुजे भोगाय पालनाय वा हुवे आह्वयामि॥

ईर्मान्यद्वपुषे वपुश्चक्रं रथस्य येमथुः। पर्यन्या नाहुषा युगा मह्ना रजांसि दीयथः॥ ३॥

ईर्मा। अन्यत्। वपुषे। वपुः। चक्रं। रथस्य। येमथुः॥ परि। अन्या। नाहुषा। युगा। मह्ना। रजांसि। दीयथः॥ ३॥

हे अश्विनौ युवां रथस्य युष्मदीयस्यान्यच्चक्रमीर्मा। अर्तेरीर्मेति रूपं गंतर्यादित्ये वपुषे तस्य शोभायै वपुर्वपुष्मत् तेजोवत् चक्रं येमथुः नियमितवंतौ स्थः। अन्यान्येन चक्रेण मह्ना महत्त्वेन स्वसामर्थ्येन नाहुषा युगा। नहुषा मनुष्याः तेषां युगा युगोपलक्षितान् कालान् प्रातरादिसवनान् अहोरात्रादिका-

लान्वा रजांसि लोकांश्च परिवीयथः परिगच्छथः। न्यघ्न्यस्य मूर्द्धनि चक्रं रथस्य येमथुः। ऋग्वे० १. ३०. १९.। इत्युक्तं ॥

तदू षु वामेना कृतं विश्वा यद्वामनु ष्टवे। नाना जाता- वरेपसा समस्मे बंधुमेयथुः ॥ ४ ॥

तत्। ऊं इति। सु। वां। एना। कृतं। विश्वा। यत्। वां। अनु। स्तवे ॥ नाना। जातौ। अरेपसा। सं। अस्मे इति। बंधुं। आ। ईयथुः ॥ ४ ॥

हे विश्वा व्याप्तौ यत् येन स्तोत्रेण वां युवामनुष्टवे अनुस्तुवे तदु। उ इति पूरणः। एनानेन पौरेण सु सुष्ठु वां युवाभ्यां कृतं संपादितं भवतु। नाना पृथ- गेव जातौ समृद्धावरेपसाऽपापावस्मे अस्मभ्यं बंधुमन्नं धनं वा समेयथुः सम्यक् गमयथः। सम्यक् प्रयच्छतमित्यर्थः ॥

आ यद्वां सूर्या रथं तिष्ठद्रघुष्यदं सदा। परि वामरुषा वयो घृणा वरंत आतपः ॥ ५ ॥

आ। यत्। वां। सूर्या। रथं। तिष्ठत्। रघुऽस्यदं। सदा ॥ परि। वां। अरुषाः। वयः। घृणा। वरंते। आऽतपः ॥ ५ ॥

हे अश्विनौ वां युवयोः सदा सर्वदा रघुष्यदं शीघ्रगं रथं सूर्या युवयोः पत्नी यत् यदातिष्ठत् आस्थितवती तदा वां परिवरंते परितो वृण्वंति। के। अरुषा अरोचमाना घृणा दीप्ता आतप आतापनाः शत्रूणां वयोऽश्वाः। अथवा तप इति विशेष्यं। वयोगंतार उक्तलक्षणा आतपः सर्वतस्तापयित्र्यो दीप्तयः परिवरंते ॥

युवोरत्रिश्चिकेतति नरा सुम्नेन चेतसा। घर्मं यद्वाम- रेपसं नासत्यास्ना भुरण्यति ॥ ६ ॥

युवोः। अत्रिः। चिकेतति। नरा। सुम्नेन। चेतसा ॥ घर्मं। यत्। वां। अरेपसं। नासत्या। आस्ना। भुरण्यति ॥ ६ ॥

हे नरा नेतारावश्विनौ युवोर्युवयोः। युवामित्यर्थः। अत्रिरस्मत्पिता ऋषिः सुम्नेन सुखेनाग्निदाहोपशमरूपेण हेतुना चेतसादरयुक्तेन मनसा चिकेतति जानाति। स्तुतवानित्यर्थः। सति दुःखे सुखमुच्यते। दुःखस्य कः प्रसंग इत्यत आह। यद्यस्मात् हे नासत्यौ वां युवयोरास्नास्येन तन्निष्पन्नेन स्तोत्रेण घर्मं दीप्तं दहंतमग्निमसुरैः स्वदाहाय प्रक्षिप्तमरेपसमपापं सुखकरं भुरण्यति प्राप्तवान् ॥

भुरण्यतिर्गतिकर्मा। अत्रेरग्नेः सकाशाद्रक्षणं हिमेनाग्निं घ्रंसं। ऋग्वे० १. ११६. ८। युवमृबीसमुत तप्तमत्रये। ऋग्वे० १०. ३९. ९.। इत्यादिभिः स्पष्टं प्रदर्शितं॥

उग्रो वां ककुहो ययिः शृण्वे यामेषु संतनिः। यद्वां दंसोभिरश्विनात्रिर्नरावववर्तति॥ ७॥

उग्रः। वां। ककुहः। ययिः। शृण्वे। यामेषु। संऽतनिः॥ यत्। वां। दंसःऽभिः। अश्विना। अत्रिः। नरा। आऽववर्तति॥ ७॥

उग्र उद्गूर्णबलो वां युवयोः ककुह उच्छ्रितो महान् ययिर्गंता संतनिः सततं गच्छन् रथो यामेषु गमनेषु यज्ञेषु वा शृण्वे श्रूयते। हे अश्विना हे नरा यद्य-स्माद्वां युवां दंसोभिः कर्मभिरत्रिरस्मत्पितावववर्तति आवर्तयति॥

मध्व ऊ षु मधूयुवा रुद्रा सिषक्ति पिप्युषी। यत्समुद्राति पर्षथः पक्वाः पृक्षो भरंत वां॥ ८॥

मध्वः। ऊं इति। सु। मधुऽयुवा। रुद्रा। सिसक्ति। पिप्युषी॥ यत्। समुद्रा। अति। पर्षथः। पक्वाः। पृक्षः। भरंत। वां॥ ८॥

हे मधूयुवा मधुरस्य सोमादेर्मिश्रयितारौ हे रुद्रा। रुत् स्तुतिः तया द्रव-णीयौ रुद्रपुत्रौ वा वां मध्वो मधुररसेन सु पिप्युषी सुष्ठु प्याययंती स्तुतिरस्म-त्कृता सिषक्ति सेवते। यद्यदा समुद्रा समुद्रवणसाधनान्यंतरिक्षाण्यतिपर्षथः अतिपारयथः। यज्ञं प्राप्नुथ इत्यर्थः। पक्वाः पृक्षोऽन्नादीनि हविर्लक्षणानि वां भरंत भ्रियंते यजमानैः॥

सत्यमिद्वा उ अश्विना युवामाहुर्मयोभुवा। ता यामन्यामहूतमा यामन्ना मृळयत्तमा॥ ९॥

सत्यं। इत्। वै। ऊं इति। अश्विना। युवां। आहुः। मयःऽभुवा॥ ता। यामन्। यामऽहूतमा। यामन्। आ। मृळयत्ऽतमा॥ ९॥

हे अश्विना युवां सत्यमित् सत्यमेव। वा इति पादपूरणः। मयोभुवा सुखस्य भावयितारावाहुः पुराविदः। ता तौ सुखकरत्वेन प्रसिद्धौ युवां यामन्यज्ञे याम-हूतमागमनार्थं भृशमाह्वातव्यौ भवतमिति शेषः। यामन्यज्ञेऽस्मदर्थागमने वा मृळयत्तमा चातिशयेन सुखयितारौ भवतं॥

इमा ब्रह्मा॑णि॒ वर्ध॑नाश्विभ्यां॑ संतु॒ शंत॑मा। या तक्षा॑म॒ रथाँ॑ इ॒वावो॑चाम बृ॒हन्नम॑ः ॥ १० ॥

इ॒मा। ब्रह्मा॑णि। वर्ध॑ना। अ॒श्विऽभ्यां॑। सं॒तु। शंऽत॑मा ॥ या। तक्षा॑म। रथा॑न्ऽइव। अवो॑चाम। बृ॒हत्। नम॑ः ॥ १० ॥

अथ स्तुतिं निगमयति। इमेमानीदानीं कृतानि ब्रह्माणि परिवृढानि स्तोत्राण्यश्विभ्यां वर्धना वर्धनानि समर्धकानि शंतमा सुखतमानि संतु। या यानि तक्षाम संपादयाम रथानिव शिल्पी तद्वत्तक्षाम तानि संतु। वयं बृहत् प्रभूतं प्रभूतफलप्रदं नमो नमस्कारोक्तिमवोचाम ॥

---

(मं० ५ सू० ८०.)

## १८.

द्यु॒तद्या॑मानं बृह॒तीमृ॒तेन॑ ऋ॒ताव॑रीमरु॒णप्सुं॑ वि॒भाती॑म्। दे॒वीमु॒षसं॒ स्व॑रा॒वह॑न्ती॒ं प्रति॒ विप्रा॑सो म॒तिभि॑र्जरंते ॥ १ ॥

द्यु॒तत्ऽया॑मानं। बृ॒ह॒ती॑म्। ऋ॒तेन॑। ऋ॒तऽव॑रीम्। अ॒रु॒णऽप्सुं॑। वि॒ऽभाती॑म् ॥ दे॒वीम्। उ॒षसं॑। स्व॑ः। आ॒ऽवह॑न्तीम्। प्रति॑। विप्रा॑सः। म॒तिऽभि॑ः। ज॒रं॒ते ॥ १ ॥

द्युतद्यामानं दीप्तरथां बृहती महतीमृतेन सत्येन यज्ञेन वर्तावरीमृतवतीमरुणप्सुमरुणरूपां विभातीं व्युच्छंतीं देवीं द्योतमानामुषसं स्वरावहंतीं सूर्यं गच्छतीं। एवं महानुभावामुषसं विप्रासो मेधाविन ऋत्विजो मतिभिः स्तुतिभिः प्रतिजरंते स्तुवंति ॥

ए॒षा जनं॑ दर्श॒ता बो॒धय॑न्ती सु॒गान्प॒थः कृ॒ण्वती॑ या॒त्यग्रे॑। बृ॒ह॒द्र॒था बृ॑ह॒ती वि॑श्वमि॒न्वोषा ज्योति॑र्यच्छ॒त्यग्रे॒ अह्ना॑म् ॥२॥

ए॒षा। जन॑म्। द॒र्श॒ता। बो॒धय॑न्ती। सु॒ऽगान्। प॒थः। कृ॒ण्वती॑। या॒ति। अग्रे॑ ॥ बृ॒ह॒त्ऽर॒था। बृ॒ह॒ती। वि॒श्व॒म्ऽइ॒न्वा। उ॒षाः। ज्योति॑ः ॥ य॒च्छ॒ति॒। अग्रे॑। अह्ना॑म् ॥ २ ॥

दर्शता दर्शनीयैषोषा बोधयंती। कं जनं। प्रसुप्तमित्यर्थः। पथः सुगान् सुगमनान् कृण्वत्यग्रे सूर्यस्य पुरस्ताद्याति गच्छति। कीदृश्युषाः। बृहद्रथा प्रभूत-

रथा बृहती महती विश्वमिन्वा विश्वं व्याप्नुवाना विश्वतर्पणा वा । ईदृश्युषा अह्नामग्रे ज्योतिस्तेजो यच्छति ॥

**एषा गोभिररुणेभिर्युजानास्रेधंती रयिमप्रायु चक्रे । पथो रदंती सुवितायं देवी पुरुष्टुता विश्ववारा वि भाति ॥३॥**

एषा । गोभिः । अरुणेभिः । युजाना । अस्रेधंती । रयिं । अप्रऽआयु । चक्रे ॥ पथः । रदंती । सुवितायं । देवी । पुरुऽस्तुता । विश्वऽवारा । वि । भाति ॥ ३ ॥

एषोषा अरुणेभिररुणवर्णैर्गोभिर्बलीवर्दै रथं युजाना योजयंत्यस्रेधंत्यशुष्यंत्यक्षीणा । किं । रयिं धनमप्राय्वप्रगंतृ अविचलितं चक्रे करोति । किं कुर्वती । पथो मार्गान् रदंती प्रकाशयंती । किमर्थं । सुविताय सुष्ठु गमनाय देवी द्योतमाना पुरुष्टुता बहुभिः स्तुता विश्ववारा सर्वैर्वरणीया विभाति प्रकाशं करोति ॥

**एषा व्येनी भवति द्विबर्हा आविष्कृण्वाना तन्वं पुरस्तात् । ऋतस्य पंथामन्वेति साधु प्रजानतीव न दिशो मिनाति ॥ ४ ॥**

एषा । विऽएनी । भवति । द्विऽबर्हाः । आविःऽकृण्वाना । तन्वं । पुरस्तात् ॥ ऋतस्यं । पंथां । अनु । एति । साधु । प्रजानतीऽइव । न । दिशः । मिनाति ॥ ४ ॥

एषोषा व्येनी भवति विशेषेण श्वेता भवति द्विबर्हा द्वयोः प्रथममध्यमयोः परिवृढोषाः पश्चात्तन्वं स्वीयां तनूमाविष्कृण्वाना प्रकटीकुर्वती । कुत्र । पुरस्तात् पूर्वस्यां दिशि । किंच ऋतस्यादित्यस्य पथां पंथानं साधु सम्यगन्वेति । किंच प्रजानतीव विश्वं प्रज्ञापयंतीव । इवेति संप्रत्यर्थे । न दिशो मिनाति न हिनस्ति । प्रत्युत दिशः प्रकाशयति । अथवा प्रजानतीवानुगंतव्यमिति प्रकर्षेणावगच्छंती चर्तस्य पंथामन्वेति ॥

**एषा शुभ्रा न तन्वो विदानोर्ध्वेव स्नाती दृशये नो अस्थात् । अप द्वेषो बाधमाना तमांस्युषा दिवो दुहिता ज्योतिषागात् ॥ ५ ॥**

एषा । शुभ्रा । न । तन्वः । विदाना । ऊर्ध्वाऽइव । स्नाती । दृशये । नः । अस्थात् ॥ अप । द्वेषः । बाधमाना । तमांसि । उषाः । दिवः । दुहिता । ज्योतिषा । आ । अगात् ॥ ५ ॥

एषोषाः शुभ्रा न शुभ्रवर्णा निर्मला स्वलंकृता योषिदिव तन्वोऽगानि विदाना प्रज्ञापयंती स्नाती स्नानं कुर्वाणोर्ध्वेवोन्नतेव स्नानादुत्तिष्ठतीव नोऽस्मद्दर्शमस्माकं पुरतो वा दृशये सर्वेषां दर्शनायोदस्थात् पूर्वस्यां दिश्युत्तिष्ठति। किं कुर्वती। द्वेषो द्वेष्याणि तमांस्यपबाधमाना दिवो दुहितोषा ज्योतिषा तेजसा सहागात् आगच्छति ॥

एषा प्रतीची दुहिता दिवो नॄन्योषेव भद्रा नि रिणीते अप्सः। व्यूर्ण्वती दाशुषे वार्याणि पुनर्ज्योतिर्युवतिः पूर्वथाकः ॥ ६ ॥

एषा । प्रतीची । दुहिता । दिवः । नॄन् । योषाऽइव । भद्रा । नि । रिणीते । अप्सः ॥ विऽऊर्ण्वती । दाशुषे । वार्याणि । पुनः । ज्योतिः । युवतिः । पूर्वऽथा । अकरित्यकः ॥ ६ ॥

एषोषाः प्रतीच्यभिमुखा सती दिवो दुहिता नॄन् सर्वान् प्राणिनः प्रति भद्रा योषेव कल्याणवेषा योषिदिवाप्सो रूपं निरिणीते प्रेरयति। किम्। दाशुषे हविर्दात्रे यजमानाय वार्याणि वरणीयानि धनानि व्यूर्ण्वती प्रयच्छंती युवतिर्नित्ययौवना सर्वत्र मिश्रयंती वा पुनरद्यापि पूर्वथा पूर्वमिव ज्योतिस्तेजोऽकः करोति ॥

---

( मं० ७ सू० ६१. )

# १९.

उद्वां चक्षुर्वरुण सुप्रतीकं देवयोरेति सूर्यस्ततन्वान्। अभि यो विश्वा भुवनानि चष्टे स मन्युं मर्त्येष्वा चिकेत १

उत् । वां । चक्षुः । वरुण । सुऽप्रतीकं । देवयोः । एति । सूर्यः । ततन्वान् ॥ अभि । यः । विश्वा । भुवनानि । चष्टे । सः । मन्युं । मर्त्येषु । आ । चिकेत ॥ १ ॥

हे मित्रावरुणा मित्रावरुणौ देवयोर्द्योतमानयोर्वां युवयोश्चक्षुः प्रकाशकं तेजः

सुप्रतीकं शोभनरूपमेवंरूपः सूर्यस्ततन्वान् तेजो विस्तारयन्नुदेति उद्गच्छति । अथोदितो यो देवो विश्वा सर्वाणि भुवनानि भूतजातान्यभिचष्टे अभिपश्यति स देवो मर्त्येषु प्रवृत्तं मन्युं स्तोत्रं कर्म वा चिकेत आजानाति ॥

प्र वां स मित्रावरुणावृतावा विप्रो मन्मानि दीर्घश्रुदियर्ति । यस्य ब्रह्माणि सुक्रतू अवाथ आ यत्क्रत्वा न शरदः पृणैथे ॥ २ ॥

प्र । वां । सः । मित्रावरुणौ । ऋतऽवा । विप्रः । मन्मानि । दीर्घऽश्रुत् । इयर्ति ॥ यस्य । ब्रह्माणि । सुक्रतू इति सुऽक्रतू । अवाथः । आ । यत् । क्रत्वा । न । शरदः । पृणैथे इति ॥ २ ॥

हे मित्रावरुणौ वां युवयोर्मन्मानि मननीयानि स्तोत्राणि स प्रसिद्धो विप्रो मेधाव्यृतावा यज्ञवान् दीर्घश्रुतं चिरकालं श्रोता एवमुक्तलक्षणो वसिष्ठ इयर्ति प्रेरयति । यस्य ऋषेर्ब्रह्माणि परिवृढानि स्तोत्राणि हे सुक्रतू शोभनकर्माणाववाथो रक्षथः । यत्कर्म शरदो बहून् संवत्सरानापृणैथे आपूरयेथे स उदियर्ति ॥

प्रोरोर्मित्रावरुणा पृथिव्याः प्र दिव ऋष्वाद्बृहतः सुदानू । स्पशो दधाथे ओषधीषु विक्ष्वृधग्यतो अनिमिषं रक्षमाणा ॥ ३ ॥

प्र । उरोः । मित्रावरुणा । पृथिव्याः । प्र । दिवः । ऋष्वात् । बृहतः । सुदानू इति सुऽदानू ॥ स्पशः । दधाथे इति । ओषधीषु । विक्षु । ऋधक् । यतः । अनिऽमिषं । रक्षमाणा ॥ ३ ॥

हे मित्रावरुणा मित्रावरुणौ युवामुरोर्विस्तीर्णायाः पृथिव्या अपि प्र प्ररिरिचाथे । अस्येदेव प्ररिरिचे । ऋग्वे० १. ६१. ९. । इत्यादिषु प्रशब्दस्य रिरिच इत्यनेन सह संबंधदर्शनादत्राप्युचितक्रियाध्याहारेण रिरिच इति योज्यं । तथा ऋष्वाद्गुणैर्महतो बृहतः स्वरूपतोऽतिमहतो दिवो द्युलोकादपि प्ररिरिचाथे हे सुदानू शोभनदानौ । किंचौषधीषु विक्षु प्रजासु निमित्तभूतासु प्रजासु चेति वा स्पशो रूपं दधाथे धारयेथे । किं कुर्वंतौ । ऋधक् सत्येन यतो विवेकात् सत्येन गच्छतो जनाननिमिषमव्यवधानेन सर्वदा रक्षमाणा पालयंतौ ॥

शंसा मित्रस्य वरुणस्य धाम शुष्मो रोदसी बद्बधे महित्वा । अयन्मासा अयज्वनामवीराः प्र यज्ञमन्मा वृजनं तिराते ॥ ४ ॥

शंस । मित्रस्य । वरुणस्य । धाम । शुष्मः । रोदसी इति । बद्बधे । महिऽत्वा ॥ अयन् । मासाः । अयज्वनां । अवीराः । प्र । यज्ञऽमन्मा । वृजनं । तिराते ॥ ४ ॥

हे ऋषे मित्रस्य वरुणस्य च धाम तेजःस्थानं शंस स्तुहि । ययोर्देवयोः शुष्मो बलं रोदसी द्यावापृथिव्यौ सह वर्तमाने महित्वा स्वमहत्त्वेन बद्बधे बध्नाति पृथक्स्थापयति इयं पृथिवीयं द्यौरिति पृथक्करोति । द्यावापृथिवी सहास्तामिति श्रुतेः । अयज्वनामननुष्ठातृणां मासाः कालावयवा अवीरा अपुत्रा एवायन् यंतु गच्छंतु । तद्विपरीतो यज्ञमन्मा यज्ञार्थं मतिमान्यज्वा वृजनं बलं प्रतिराते प्रवर्धयतु । प्रपूर्वस्तिरतिर्वर्धनार्थः ॥

अमूरा विश्वा वृषणाविमा वां न यासु चित्रं ददृशे न यक्षं । द्रुहः सचंते अनृता जनानां न वां निण्यान्यचिते अभूवन् ॥ ५ ॥

अमूरा । विश्वा । वृषणौ । इमाः । वां । न । यासु । चित्रं । ददृशे । न । यक्षं ॥ द्रुहः । सचंते । अनृता । जनानां । न । वां । निण्यानि । अचिते । अभूवन् ॥ ५ ॥

हे अमूरा अमूढौ हे विश्वा व्याप्तौ हे वृषणौ वर्षितारौ वां युवाभ्यामिमेमानि स्तुतिवचांसि क्रियंते । यासु स्तुतिषु चित्रमाश्चर्यं न ददृशे न दृश्यते न यक्षं न पूजा दृश्यते । युवाभ्यां महिम्नोऽपि महत्त्वात् प्रयत्नेन क्रियमाणमपि स्तोत्रं न चमत्करोतीत्यर्थः । जनानामनृता स्तुत्यविषयाणि स्तोत्राणि द्रुहो दोग्धारः सचंते सेवंते न महांतः । वां युवाभ्यां क्रियमाणानि निण्यान्यंतर्हितानि रहस्यान्यपि स्तोत्राण्यचितेऽज्ञानाय नाभूवन् न भवंति ॥

समु वां यज्ञं महयं नमोभिर्हुवे वां मित्रावरुणा सबाधः । प्र वां मन्मान्यृचसे नवानि कृतानि ब्रह्म जुजुषन्निमानि ॥६॥

सं । ऊं इति । वां । यज्ञं । महयं । नमःऽभिः । हुवे । वां । मित्रावरुणा । सऽबाधः ॥ प्र । वां । मन्मानि । ऋचसे । नवानि । कृतानि । ब्रह्म । जुजुषन् । इमानि ॥ ६ ॥

हे मित्रावरुणौ वां युवयोर्यज्ञं नमोभिर्नमस्कारैः स्तुतिभिः समु महयं संपूजयाम्यहं । तदर्थं हे मित्रावरुणा मित्रावरुणौ वां सबाधो बाधायुक्तोऽहं हुवे आह्व-

यामि बाधापरिहाराय । वां युवामृचसे सेवितुं नवानि नूतनानि स्तुत्यानि वा मन्मानि स्तोत्राणि प्र भवंत्वित्यध्याहारः । कृतानि मया समूहीकृतानीमानीदानीं क्रियमाणानि ब्रह्म परिवृढानि स्तोत्राणि युवां जुजुषन् प्रीणयंतु ॥

इयं देव पुरोहितिर्युवभ्यां यज्ञेषु मित्रावरुणावकारि । विश्वानि दुर्गा पिपृतं तिरो नो यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥

इयं । देव । पुरःऽहितिः । युवऽभ्यां । यज्ञेषु । मित्रावरुणौ । अकारि ॥ विश्वानि । दुःऽगा । पिपृतं । तिरः । नः । यूयं । पात । स्वस्तिऽभिः । सदा । नः ॥ ७ ॥

अनया स्तुतिमुपसंहरति । हे देवा देवौ मित्रावरुणौ युवभ्यां युवाभ्यां यज्ञेष्वियं पुरोहितिः पुरस्क्रिया पूजा स्तुतिलक्षणाकारि कृताभूत् । तां सेवित्वा विश्वानि सर्वाणि दुर्गा दुःखेन गंतव्यान्यापदस्तिरस्तिरस्कुरुतं । तथा कृत्वा नोऽस्मान्पिपृतं पारयतं । शिष्टो गतः ॥

---

( मं० ७ सू० ७१. )

## २०.

अप स्वसुरुषसो नग्जिहीते रिणक्ति कृष्णीररुषाय पंथां । अश्वामघा गोमघा वां हुवेम दिवा नक्तं शरुमस्मद्युयोतं ॥ १ ॥

अप । स्वसुः । उषसः । नक् । जिहीते । रिणक्ति । कृष्णीः । अरुषाय । पंथां ॥ अश्वऽमघा । गोऽमघा । वां । हुवेम । दिवा । नक्तं । शरुं । अस्मत् । युयोतं ॥ १ ॥

स्वसुः स्वसृस्थानीयाया उषसः सकाशात् नक् नक्तं रात्रिरपजिहीते अपगच्छति । तस्या अवकाशं दत्वा स्वयमपगतेत्यर्थः । स्वसा स्वस्रे ज्यायस्यै योनिमारैक् । ऋग्वे० १. १२४. ८. । इत्युक्तं । कृष्णीः कृष्णवर्णा रात्रिररुषायारोचमानायाह्ने सूर्याय वा पंथां पंथानं मार्गं रिणक्ति रेचयति । यस्मादेवं तस्माद्युवयोरागमनसमयत्वात् हे अश्वामघाऽश्वधनौ हे गोमघा गोधनौ । उभयोः प्रदातारावित्यर्थः ।

ईदृशौ वां युवां हुवेम स्तुमः आह्वयामः । दिवानक्तं सर्वदा शरुं हिंसकमस्मदस्मत्तो युयोतं पृथक्कुरुतं ॥

उपायातं दाशुषे मर्त्याय रथेन वाममश्विना वहंता । युयुतमस्मदनिराममीवां दिवा नक्तं माध्वी त्रासीथां नः ॥२॥

उपऽआयातं । दाशुषे । मर्त्याय । रथेन । वामं । अश्विना । वहंता ॥ युयुतं । अस्मत् । अनिरां । अमीवां । दिवा । नक्तं । माध्वी इति । त्रासीथां । नः ॥ २ ॥

हे अश्विनौ युवामुपायातं उपागच्छतमस्मदाह्वानं प्रति । किमर्थं । दाशुषे हविषां दात्रे मर्त्याय यजमानाय तदर्थं रथेन वामं वननीयं धनं वहंता वहंतौ । अस्मदस्मत्तो युयुतं पृथक्कुरुतं । किं । अनिरां । इरान्नं तद्रहितं दारिद्र्यमित्यर्थः । अमीवां रोगं च । हे माध्वी मधुमंतौ युवां नोऽस्मान् दिवा नक्तं सर्वदा त्रासीथां रक्षतं ॥

आ वां रथमवमस्यां व्युष्टौ सुम्नायवो वृषणो वर्तयंतु । स्यूमगभस्तिमृतयुग्भिरश्वैराश्विना वसुमंतं वहेथां ॥ ३ ॥

आ । वां । रथं । अवमस्यां । विऽउष्टौ । सुम्नऽयवः । वृषणः । वर्तयंतु ॥ स्यूमऽगभस्तिं । ऋतयुक्ऽभिः । अश्वैः । आ । अश्विना । वसुऽमंतं । वहेथां ॥ ३ ॥

अवमस्यामासन्नायां व्युष्टौ व्युच्छन उषसि वां युवयो रथं सुम्नायवः सुखेन योजयंतोऽश्वा वृषणो वर्षका युवामा वर्तयंतु । स्यूमगभस्तिं सुखरश्मिं स्यूतरश्मिं वसुमंतं प्रदेयधनयुक्तं रथं हे अश्विनाश्विनावृतयुग्भिरुदकयुक्तैरश्वैरुदकप्रदैरश्वैरावहेथां ॥

यो वां रथो नृपती अस्ति वोळ्हा त्रिवंधुरो वसुमाँ उस्रयामा । आ न एना नासत्योपयातमभि यद्वां विश्वप्स्न्यो जिगाति ॥ ४ ॥

यः । वां । रथः । नृपती इति नृऽपती । अस्ति । वोळ्हा । त्रिऽवंधुरः । वसुऽमान् । उस्रऽयामा ॥ आ । नः । एना । नासत्या । उप । यातं । अभि । यत् । वां । विश्वऽप्स्न्यः । जिगाति ॥ ४ ॥

हे नृपती नृणां यजमानानां पालकावश्विनौ वां युवयोर्यो रथो वोळ्हा युवयोर्वाहकोऽस्ति सर्वदा संनिहितो वर्तते । कीदृशोऽसौ । त्रिवंधुरः सारथ्यधिष्ठानस्थानत्रयोपेतो वसुमान् धनवानुस्रयामोस्रं दिवसं प्रति गंता एनैनेन रथेन हे नासत्याश्विनौ नोऽस्मानुपायातं । यद्रथो यश्च रथो वां विश्वप्स्न्यो व्याप्तरूपोऽभिजिगाति अभिगच्छति । अथ वा । यद्यस्माद्विश्वप्स्न्यो वसिष्ठो वां जिगाति स्तौति अत उपायातं ॥

युवं च्यवानं जरसोऽमुमुक्तं नि पेदव ऊहथुराशुमश्वं ।
निरंहसस्तमसः स्पर्तमत्रिं नि जाहुषं शिथिरे धातमंतः ॥५॥

युवं । च्यवानं । जरसः । अमुमुक्तं । नि । पेदवे । ऊहथुः । आशुं । अश्वं ॥ निः । अंहस । तमसः । स्पर्तं । अत्रिं । नि । जाहुषं । शिथिरे । धातं । अंतरिति ॥ ५ ॥

हे अश्विना युवं युवां च्यवानं जरसो जीर्णाद्रूपादमुमुक्तं अमुंचतं । युवं च्यवानमश्विना जरंतं पुनर्युवानं । ऋग्वे० १. ११७. १३. । इति ह्यन्यत्र । तथा पेदव एतन्नामकाय राज्ञ आशुं शीघ्रगामिनमश्वं निरूहथुः न्यवहतं युद्धे । युवं श्वेतं पेदवे । ऋग्वे० १. ११८.९. । इति निगमः । तथात्रिं महर्षिमंहस ऋबीसादग्नेः सकाशात्तमसश्च गुहांतः स्थिताच्च सकाशान्निष्पर्तं न्यपारयतं । युवमृबीसमुत तप्तमत्रय ओमन्वंतं चक्रथुः । ऋग्वे० १०. ३९. ९. । इति निगमः । तथा जाहुषं शिथिरे शिथिले भ्रष्टे स्वराष्ट्रेऽतर्मध्ये पुनर्निधातं न्यधातं । परिविष्टं जाहुषं विश्वतः सीं । ऋग्वे० १. ११६. २०. । इति ह्युक्तं ॥

इयं मनीषा इयमश्विना गीरिमां सुवृक्तिं वृषणा जुषेथां ।
इमा ब्रह्माणि युवयून्यग्मन्यूयं पात स्वस्तिभिः सदा नः ॥६॥

इयं । मनीषा । इयं । अश्विना । गीः । इमां । सुऽवृक्तिं । वृषणा । जुषेथां ॥ इमा । ब्रह्माणि । युवऽयूनि । अग्मन् । यूयं । पात । स्वस्तिऽभिः । सदा । नः ॥ ६ ॥

हे अश्विनाश्विनावियं मनीषा स्तुतिर्युवयोः कृतेति शेषः । तदेवादरार्थं पुनरुच्यते । इयं गीः स्तुतिः कृता । हे वृषणा कामानां वर्षकाविमामस्मत्कृतां सुवृक्तिं शोभनां स्तुतिं जुषेथां सेवेथां । इमेमानि ब्रह्माणि कर्माणि स्तुतिरूपाणि युवयूनि युवां कामयमानानि संत्यग्मन् गच्छंतु । युवां यूयं पातेति सिद्धं ॥

---

(मं० ७ सू० ७७.)

# २१.

**उपो रुरुचे युवतिर्न योषा विश्वं जीवं प्रसुवंती चरायै । अभूदग्निः समिधे मानुषाणामकर्ज्योतिर्बाधमाना तमांसि १**

उपो इति । रुरुचे । युवतिः । न । योषा । विश्वं । जीवं । प्रऽसुवंती । चरायै ॥ अभूत् । अग्निः । सम्ऽइधे । मानुषाणां । अकः । ज्योतिः । बाधमाना । तमांसि ॥ १ ॥

इयमुषा उपो समीप एव सूर्यस्य रुरुचे दीप्यते । युवतिर्यौवनोपेता योषा न योषिदिव । सा यथा वस्त्राभरणादिना पत्युः समीपे प्रदीप्यते तद्वत् । किं कुर्वती । विश्वं सर्वं जीवं जीवसंघं चरायै संचाराय प्रसुवंती प्रेरयंती । किंचाग्निर्मानुषाणां मनुष्याणामर्थाय समिधेऽभूत् समिंधनीयोऽभवत् । कृत्यार्थे केन् । समिद्धः सन् तमांस्यंधकारान्बाधमाना बाधमानं बाधकं ज्योतिस्तेजःसंघमकः अकार्षीत् । अथ-वौषसं ज्योतिस्तमांसि बाधमाना बाध्यमानान्यकः अकरोत् ॥

**विश्वं प्रतीची सप्रथा उदस्थाद्रुशद्वासो बिभ्रती शुक्रमश्वैत् । हिरण्यवर्णा सुदृशीकसंदृग्गवां माता नेत्र्यह्नामरोचि २**

विश्वं । प्रतीची । सऽप्रथाः । उत् । अस्थात् । रुशत् । वासः । बिभ्रती । शुक्रं । अश्वैत् ॥ हिरण्यऽवर्णा । सुदृशीकऽसंदृक् । गवां । माता । नेत्री । अह्नां । अरोचि ॥ २ ॥

विश्वं कृत्स्नं जगत्प्रति प्रतीच्यभिमुखी सप्रथाः सर्वतः पृथुतरोदस्थात् उदगच्छत् । उदिता च रुशद्दीप्तं शुक्रं तेजोमयं वासो वसनीयं तेजःसमूहं बिभ्रती धारयंत्यश्वैत् वर्धते । हिरण्यवर्णा हितरमणीयवर्णोपेता सुदृशीकसंदृक् । संदर्शयतीति संदृक् तेजः । सुष्ठु दर्शनीयं संदृक् तेजो यस्याः सा तादृशी । गवां वाचां गवामेव वा माता निर्मात्री । उषःकाले हि पक्षिमनुष्यादीनां वाचो निर्गच्छंति । गवामपि तस्मिन्काले संचारात्तन्निर्मातृत्वं । अथवा रश्मीनां निर्मात्र्यरोचि रोचतेऽह्नां नेत्री दिवसानां प्रापयित्री ॥

**देवानां चक्षुः सुभगा वहंती श्वेतं नयंती सुदृशीकमश्वं । उषा अदर्शि रश्मिभिर्व्यक्ता चित्रामघा विश्वमनु प्रभूता ॥३॥**

देवानां । चक्षुः । सुऽभगा । वहंती । श्वेतं । नयंती । सुऽदृशींकं । अश्वं ॥ उषाः । अदर्शि । रश्मिऽभिः । विऽअंक्ता । चित्रऽमघा । विश्वं । अनु । प्रऽभूता ॥ ३ ॥

देवानां चक्षुश्चक्षुःस्थानीयं तेजो वहंती धारयंती सुभगा शोभनधना सुदृशीकं सुदर्शनमश्वं सर्वदा गंतारमादित्यं नयंती प्रापयंती । किं । श्वेतं श्वेतवर्णोपेतं सूर्यं । प्रकाशयुक्तं कुर्वतीत्यर्थः । कीदृश्युषाः । रश्मिभिः स्वकीयैर्व्यक्तादर्शि दृश्यते च । चित्रामघा विचित्रधना विश्वमनु सर्वं जगदनुलक्ष्य प्रभूता प्रवृद्धा सर्वजगद्व्यवहारायेत्यर्थः ॥

अंतिवामा दूरे अमित्रमुच्छोर्वीं गव्यूतिमभयं कृधी नः । यावय द्वेष आ भरा वसूनि चोदय राधो गृणते मघोनि ४

अंतिऽवामा । दूरे । अमित्रं । उच्छ । उर्वीं । गव्यूतिं । अभयं । कृधि । नः ॥ यवय । द्वेषः । आ । भर । वसूनि । चोदय । राधः । गृणते । मघोनि ॥ ४ ॥

हे उषोऽतिवामा अंत्यस्मदंतिके वामं वननीयं धनं यस्याः सांतिवामा त्वममित्रमस्मच्छत्रुं दूरेऽसक्तो विप्रकृष्टदेशे वर्तमानं कृत्वा व्युच्छ विभाहि । यथा मित्रो दूरे भवति तथा व्युच्छेत्यर्थः । तथोर्वीं गव्यूतिं भूमिमभयं नोऽस्माकं कृधि कुरु । किं च द्वेषोऽस्मद्द्वेष्टॄन्यावय अस्मत्तः पृथक्कुरु । वसूनि शत्रूणां धनान्याभर आहर । राधो धनं चोदय प्रेरय । गृणते स्तुवते मह्यं हे मघोनि धनवति ॥

अस्मे श्रेष्ठेभिर्भानुभिर्वि भाह्युषो देवि प्रतिरंती न आयुः । इषं च नो दधती विश्ववारे गोमदश्वावद्रथवच्च राधः ॥५॥

अस्मे इति । श्रेष्ठेभिः । भानुऽभिः । वि । भाहि । उषः । देवि । प्रऽतिरंती । नः । आयुः ॥ इषं । च । नः । दधती । विश्वऽवारे । गोऽमत् । अश्वऽवत् । रथऽवत् । च । राधः ॥ ५ ॥

हे उषो देवि अस्मे अस्मभ्यं श्रेष्ठेभिः प्रशस्यैर्भानुभी रश्मिभिः प्रकाशैर्विभाहि प्रकाशय । किं कुर्वती। नोऽस्माकमायुरायुष्यं प्रतिरंती वर्धयंती । हे विश्ववारे विश्वैः संभजनीये देवि नोऽस्मभ्यमिषं च गोमद्गोभिर्बहुभिरुपेतमश्वावदश्वैश्चोपेतं रथवद्रथैरुपेतं राधो धनं च दधती विभाहीति ॥

यां त्वा दिवो दुहितर्वर्धयंत्युषः सुजाते मतिभिर्वसिष्ठाः।
सास्मासु धा रयिमृष्वं बृहंतं यूयं पात स्वस्तिभिः सदा नः ६

यां। त्वा। दिवः। दुहितः। वर्धयंति। उषः। सुऽजाते। मतिऽभिः। वसिष्ठाः॥ सा। अस्मासु। धाः। रयिं। ऋष्वं। बृहंतं। यूयं। पात। स्वस्तिऽभिः। सदा। नः॥ ६॥

हे दिवो दुहितरुषः सुजाते शोभनजनने यां त्वा त्वां मतिभिः स्तोत्रैर्वसिष्ठा वर्धयंति सा त्वमस्मासु वसिष्ठेषु ऋष्वं प्रदीप्तं बृहंतं महांतं रयिं धनं धाः धेहि॥

---

(मं० ७ सू० ८६.)

## २२.

धीरा त्वस्य महिना जनूंषि वि यस्तस्तंभ रोदसी चिदुर्वी।
प्र नाकमृष्वं नुनुदे बृहंतं द्विता नक्षत्रं पप्रथच्च भूम॥ १॥

धीरा। तु। अस्य। महिना। जनूंषि। वि। यः। तस्तंभ। रोदसी इति। चित्। उर्वी इति॥ प्र। नाकं। ऋष्वं। नुनुदे। बृहंतं। द्विता। नक्षत्रं। पप्रथत्। च। भूम॥ १॥

अस्य वरुणस्य जनूंषि जन्मानि महिना महिम्ना तु क्षिप्रं धीरा धीराणि धैर्यवंति भवंति यो वरुण उर्वी विस्तीर्णे रोदसी चित् द्यावापृथिव्यावपि वितस्तंभ विविधं स्तब्धे स्वकीये स्थाने स्थिते अकरोत्। यश्च बृहंतं महांतं नाकमादित्यं नक्षत्रं च ऋष्वं दर्शनीयं द्विता द्वैधं प्रनुनुदे प्रेरयति स्म। अहनि सूर्यं दर्शनीयं प्रेरयति रात्रौ नक्षत्रं तथेति द्विप्रकारः। भूम भूमिं च यः पप्रथत् अप्रथयत् विस्तारितवान् तस्यास्य वरुणस्येत्यन्वयः॥

उत स्वया तन्वा३ सं वदे तत्कदा न्व१तर्वरुणे भुवानि।
किं मे हव्यमहृणानो जुषेत कदा मृळीकं सुमना अभि ख्यं॥२॥

उत। स्वया। तन्वा। सं। वदे। तत्। कदा। नु। अंतः। वरुणे। भुवानि॥ किं। मे। हव्यं। अहृणानः। जुषेत। कदा। मृळीकं। सुऽमनाः। अभि। ख्यं॥ २॥

वरुणं शीघ्रं दिदृक्षमाण ऋषिरनया वितर्कयति। उतेति विचिकित्सायां। उत किं स्वया तन्वा स्वीयेनात्मीयेन शरीरेण संवदे सहवदनं करोमि। आहोस्वित् तत्तेन वरुणेन सह संवदे। कदा नु कदा खलु वरुणे देवेंऽतर्भुवानि अंतर्भूतो भवानि। वरुणस्य चित्ते संलग्नो भवानीत्यर्थः। अपि च मे मदीयं हव्यं स्तोत्रं हविर्वाहृणानोऽक्रुध्यन् वरुणः किं केन हेतुना जुषेत सेवेत। सुमनाः शोभनमनस्कः सन्नहं कदा कस्मिन्काले मृळीकं सुखयितारं वरुणमभिख्यं अभिपश्येयं॥

पृच्छे तदेनो वरुण दिदृक्षूपो एमि चिकितुषो विपृच्छं।
समानमिन्मे कवयश्चिदाहुरयं ह तुभ्यं वरुणो हृणीते॥ ३॥

पृच्छे। तत्। एनः। वरुण। दिदृक्षु। उपो इति। एमि। चिकितुषः। विऽपृच्छं॥ समानं। इत्। मे। कवयः। चित्। आहुः। अयं। ह। तुभ्यं। वरुणः। हृणीते॥ ३॥

हे वरुण तदेनः पापं पृच्छे त्वां पृच्छामि। दिदृक्षु। छांदसः सुलोपः। द्रष्टुमिच्छन्नहं। येन पापेन हेतुना त्वदीयैः पाशैर्बद्धोऽस्मि पृष्टः सन् तत्पापं कथय। अहं विपृच्छं विविधं प्रष्टुं चिकितुषो विदुषो जनानुपो एमि उपागां। ते कवयश्चित् क्रांतदर्शिनो जनाश्च मे मह्यं समानमित् समानमेवैकरूपमेवाहुः अकथयन्। यदाहुस्तदाह। हे स्तोतस्तुभ्यमयं हायमेव वरुणो हृणीते। क्रुध्यतीति। अतः क्रोधं परित्यज्यास्मान्पाशेभ्यो मोचय॥

किमाग आस वरुण ज्येष्ठं यत्स्तोतारं जिघांससि सखायं।
प्र तन्मे वोचो दूळभ स्वधावोऽव त्वानेना नमसा तुर इयां ४

किं। आगः। आस। वरुण। ज्येष्ठं। यत्। स्तोतारं। जिघांससि। सखायं॥ प्र। तत्। मे। वोचः। दुःऽदभ। स्वधाऽवः। अव। त्वा। अनेनाः। नमसा। तुरः। इयां॥ ४॥

हे वरुण ज्येष्ठमधिकं किमाग आस कोऽपराधो मया कृतो बभूव। यदेनागसा सखायं मित्रभूतं संतं स्तोतारं जिघांससि हंतुमिच्छसि। हे दूळभ दुर्दभ अन्यैर्बाधितुमशक्य स्वधावस्तेजस्विन् हे वरुण तदागो मे मह्यं प्रवोचः प्रब्रूहि। एवं सति तस्य प्रायश्चित्तं कृत्वानेना अपापः सन्नहं तुरस्त्वरमाणः शीघ्रो नमसा नमस्कारेण हविषा त्वा त्वामवेयां उपगच्छेयं॥

अव॑ द्रु॒ग्धानि॒ पित्र्या॑ सृजा॒ नोऽव॒ या व॒यं च॑कृ॒मा त॒नूभिः॑ । अव॑ राजन्पशु॒तृपं॒ न ता॒युं सृ॒जा व॒त्सं न दाम्नो॒ व॑सिष्ठं ॥ ५ ॥

अव॑ । द्रु॒ग्धानि॑ । पित्र्या॑ । सृ॒ज॒ । न॒ः । अव॑ । या । व॒यं । च॒कृ॒म । त॒नूभि॑ः ॥ अव॑ । रा॒ज॒न् । प॒शु॒ऽतृपं॑ । न । ता॒युं । सृ॒ज । व॒त्सं । न । दाम्न॑ः । वसि॑ष्ठं ॥ ५ ॥

हे वरुण पित्र्या पितृतः प्राप्तानि नोऽस्मदीयानि द्रुग्धानि द्रोहान् बंधनहेतुभूतानवसृज विमुंच अस्मत्तो विश्लेषय । वयं च या यानि द्रोहजातानि तनूभिः शरीरैश्चकृम कृतवंतःस्म तानि चावसृज । हे राजन् राजमान वरुण पशुतृपं न तायुं स्तैन्यप्रायश्चित्तं कृत्वावसाने घासादिभिः पशूनां तर्पयितारं स्तेनमिव दाम्नो रज्जोर्वत्सं न वत्समिव च वसिष्ठं मां बंधकात्पापादवसृज विमुंच ॥

न स स्वो दक्षो॑ वरुण॒ ध्रुति॒ः सा सुरा॑ म॒न्युर्वि॒भीद॑को॒ अचि॑त्तिः । अस्ति॒ ज्याया॒न्कनी॑यस उ॒पारे॒ स्वप्न॑श्च॒नेदनृ॑तस्य प्र॒यो॒ता ॥ ६ ॥

न । सः । स्वः । दक्ष॑ः । व॒रु॒ण॒ । ध्रुति॑ः । सा । सुरा॑ । म॒न्युः । वि॒ऽभीद॑कः । अचि॑त्तिः ॥ अस्ति॑ । ज्याया॑न् । कनी॑यसः । उ॒प॒ऽअ॒रे । स्वप्न॑ः । च॒न । इत् । अनृ॑तस्य । प्र॒ऽयो॒ता ॥ ६ ॥

हे वरुण स स्वो दक्षः पुरुषस्य स्वभूतं तद्बलं पापप्रवृत्तौ कारणं न भवति । किं तर्हि ध्रुतिः स्थिरोत्पत्तिसमय एव निर्मिता दैवगतिः कारणं ॥ ध्रु गतिस्थैर्ययोरिति धातुः ॥ सा च ध्रुतिर्वक्ष्यमाणरूपा सुरा प्रमादकारिणी मन्युः क्रोधश्च गुर्वादिविषयः सन् अनर्थहेतुः । विभीदको द्यूतसाधनोऽक्षः । स च द्यूतेषु पुरुषं प्रेरयन्ननर्थहेतुर्भवति । अचित्तिरज्ञानमविवेककारणं । अत ईदृशी दैवक्लृप्तिरेव पुरुषस्य पापप्रवृत्तौ कारणं । अपि च कनीयसोऽल्पस्य हीनस्य पुरुषस्य पापप्रवृत्तावुपार उपागते समीपे नियंतृत्वेन स्थितो ज्यायानधिक ईश्वरोऽस्ति । स एव तं पापे प्रवर्तयति । तथा चाम्नातं । एष ह्येवासाधु कर्म कारयति तं यमधो निनीषत इति । एवं च सति स्वप्नश्चन स्वप्नोऽप्यनृतस्य पापस्य प्रयोता प्रकर्षेण मिश्रयिता भवति । इदिति पूरकः । स्वप्ने कृतैरपि कर्मभिर्बहूनि पापानि जायंते किमु वक्तव्यं जाग्रति कृतैः कर्मभिः पापान्युत्पद्यंत इति हे वरुण त्वया क्षंतव्य इति भावः ॥

अरं दासो न मीळ्हुषे कराण्यहं देवाय भूर्णयेऽनागाः ।
अचेतयदचितो देवो अर्यो गृत्सं राये कवितरो जुनाति ॥७॥

अरं । दासः । न । मीळ्हुषे । कराणि । अहं । देवाय । भूर्णये । अनागाः ॥ अचेतयत् । अचितः । देवः । अर्यः । गृत्सं । राये । कविऽतरः । जुनाति ॥ ७ ॥

मीळ्हुषे सेक्त्रे कामानां वर्षित्रे भूर्णये जगतो भर्त्रे देवाय दानादिगुणयुक्ताय वरुणायानागास्तत्प्रसादादपापः सन्नहमरमलं पर्याप्तं कराणि । परिचरणं करवाणि । दासो न । यथा भृत्यः स्वामिने सम्यक् परिचरति तद्वत् अर्यः स्वामी स च देवोऽचितोऽजानतोऽस्मानचेतयत् चेतयतु प्रज्ञापयतु । गृत्सं स्तोतारं च कवितरः प्राज्ञतरो देवो राये धनाय धनप्राप्त्यर्थं जुनाति प्रेरयतु ॥

अयं सु तुभ्यं वरुण स्वधावो हृदि स्तोम उपश्रितश्चिदस्तु । शं नः क्षेमे शमु योगे नो अस्तु यूयं पात स्वस्तिभिः सदा नः ॥ ८ ॥

अयं । सु । तुभ्यं । वरुण । स्वधाऽवः । हृदि । स्तोमः । उपऽश्रितः । चित् । अस्तु ॥ शं । नः । क्षेमे । शं । ऊं इति । योगे । नः । अस्तु । यूयं । पात । स्वस्तिऽभिः । सदा । नः ॥ ८ ॥

हे स्वधावोऽन्नवन्वरुण तुभ्यं त्वदर्थं क्रियमाणोऽयमेतत्सूक्तात्मकः स्तोमः स्तोत्रं हृदि त्वदीये हृदये सु सुष्टूपश्रित उपगतः समवेतोस्तु । चिदिति पूरकः । अप्राप्तस्य प्रापणं योगः । प्राप्तस्य रक्षणं क्षेमः । नोऽस्मदीये क्षेमे रक्षणे शमुपद्रवाणां शमनमस्तु । योगे च नोऽस्मदीये प्रापणे शमु शमनमेवास्तूपद्रवाणां हे वरुणादयो देवाः यूयं नोऽस्मान् सर्वदा स्वस्तिभिरविनाशैः पात रक्षत ॥

---

(मं० ७ सू० ९५.)

## २३.

प्र क्षोदसा धायसा सस्र एषा सरस्वती धरुणमायसी पूः। प्रबाबधाना रथ्येव याति विश्वा अपो महिना सिंधुरन्याः ॥ १ ॥

प्र। क्षोदसा। धायसा। सस्रे। एषा। सरस्वती। धरुणं। आयसी। पूः॥ प्रऽबाबधाना। रथ्याऽइव। याति। विश्वाः। अपः। महिना। सिंधुः। अन्याः॥ १ ॥

सरस्वत्या एषा नदीवन्निगमः एषा दृश्यमाना नदीरूपा सरस्वती आयस्ययसा निर्मिता पूः पुरीव धरुणं। लिंगव्यत्ययः। धरुणा धारयित्री धायसा धारकेण क्षोदसोदकेन प्रसस्रे प्रधावति शीघ्रं गच्छति। सिंधुः स्यंदनशीला नदीरूपा सान्या विश्वाः सर्वा अप आपगा महिना महिम्ना प्रबाबधाना भृशं बाधमाना रथ्येव प्रतोलीव विस्तीर्णा सती याति गच्छति। यद्वा रथ्येव रथिनेव यथा रथी रथेन मार्गस्थं तरुगुल्मादिकं चूर्णीकृत्य गच्छति तद्वत् स्वकीयेन वेगेन सर्वं संपिंषती गच्छतीत्यर्थः॥

एकाचेतत्सरस्वती नदीनां शुचिर्यती गिरिभ्य आ समुद्रात्। रायश्चेतंती भुवनस्य भूरेर्घृतं पयो दुदुहे नाहुषाय २

एका। अचेतत्। सरस्वती। नदीनां। शुचिः। यती। गिरिऽभ्यः। आ। समुद्रात्॥ रायः। चेतंती। भुवनस्य। भूरेः। घृतं। पयः। दुदुहे। नाहुषाय॥ २ ॥

सहस्रवत्सरेण क्रतुना यक्ष्यमाणो नाहुषो नाम राजा सरस्वतीं नदीं प्रार्थयामास सा च तस्मै सहस्रसंवत्सरपर्याप्तं पयो घृतं च प्रददौ। अयमर्थोऽत्र प्रतिपाद्यते। नदीनामन्यासां मध्ये शुचिः शुद्धा गिरिभ्यः सकाशादासमुद्रात्समुद्रपर्यंतं यती गच्छंत्येका सरस्वती न्यचेतत् नाहुषस्य प्रार्थनामज्ञासीत्। तथा भुवनस्य भूतजातस्य भूरेर्बहुलस्य रायो धनानि चेतंती प्रज्ञापयंती प्रयच्छंती नाहुषाय राज्ञे घृतं पयश्च सहस्रसंवत्सरक्रतोः पर्याप्तं दुदुहे दुग्धवती दत्तवती॥

स वावृधे नर्यो योषणासु वृषा शिशुर्वृषभो यज्ञियासु। स वाजिनं मघवद्भ्यो दधाति वि सातये तन्वं मामृजीत ३

सः । वुवृधे । नर्यः । योषणासु । वृषा । शिशुः । वृषभः । यज्ञियासु ॥ सः । वाजिनं । मघवत्ऽभ्यः । दधाति । वि । सातये । तन्वं । ममृजीत ॥ ३ ॥

मध्यस्थानो वायुः सरस्वान् । नर्यो नृभ्यो हितो वृषा सेचनसमर्थः शिशुरल्पः प्रादुर्भावसमयेऽल्पतया दृश्यमानो वृषभो वर्षिता । एवंभूतः स सरस्वान् यज्ञियासु यज्ञार्हासु योषणासु योषित्स्वात्मनः कलत्रभूतासु मध्यमस्थानास्वप्सु मध्ये वव्रृधे वर्धते । स तादृशः सरस्वान् मघवद्भ्यो हविष्मद्भ्यो यजमानेभ्यो वाजिनं बलिनं पुत्रं दधाति ददाति । तथा सातये लाभार्थं तन्वं तेषां शरीरं विमामृजीत विमार्ष्टि । लाभार्थं संस्करोतीत्यर्थः । यद्यप्येषा सरस्वतः स्तुतिस्तथापि सरस्वत्याः प्रीणनार्थं तत्स्तवनमिति छांदोगिके सारस्वते तृचेऽस्या उक्तो विनियोगो न विरुध्यते ॥

उत स्या नः सरस्वती जुषाणोप श्रवत्सुभगा यज्ञे अस्मिन् । मितज्ञुभिर्नमस्यैरियाना राया युजा चिदुत्तरा सखिभ्यः ॥ ४ ॥

उत । स्या । नः । सरस्वती । जुषाणा । उप । श्रवत् । सुऽभगा । यज्ञे । अस्मिन् ॥ मितज्ञुऽभिः । नमस्यैः । इयाना । राया । युजा । चित् । उत्ऽतरा । सखिऽभ्यः ॥ ४ ॥

उतापि च जुषाणा प्रीयमाणा सुभगा शोभनधना स्या सा सरस्वती नोऽस्माकमस्मिन्यज्ञ उपश्रवत् अस्मदीयाः स्तुतीरुपश्रृणोतु । कीदृशी सा । मितज्ञुभिः प्रह्वैर्जानुभिर्नमस्यैर्नमस्कारैर्देवैरियानोपगम्यमाना । चिच्छब्दश्चार्थे । युजा नित्ययुक्तेन राया धनेन च संगता सखिभ्य उत्तरोत्कृष्टतरा । ईदृश्यस्मदीयाः स्तुतीरुपश्रृणोत्वित्यन्वयः ॥

इमा जुह्वाना युष्मदा नमोभिः प्रति स्तोमं सरस्वति जुषस्व । तव शर्मन्प्रियतमे दधाना उप स्थेयाम शरणं न वृक्षं ॥ ५ ॥

इमा । जुह्वानाः । युष्मत् । आ । नमःऽभिः । प्रति । स्तोमं । सरस्वति । जुषस्व ॥ तव । शर्मन् । प्रियऽतमे । दधानाः । उप । स्थेयाम । शरणं । न । वृक्षं ॥ ५ ॥

हे सरस्वति इमेमान्यस्मदीयानि हवींषि जुह्वानास्तुभ्यं जुह्वतो वयं नमोभिस्त्वद्विषयैर्नमस्कारैर्युष्मत्त्वत्सकाशादा । उपसर्गश्रुतेर्योग्यक्रियाध्याहारः । आददीमहि धनानीति शेषः । स्तोमं चास्मदीयं स्तोत्रं प्रतिजुषस्व प्रतिसेवस्व । वयं च प्रियतमेऽतिशयेन प्रिये तव त्वदीये शर्मन् शर्मणि सुखे दधाना निधीयमानाः संतः शरणं न वृक्षमाश्रयभूतं वृक्षमिवोपस्थेयाम त्वामुपतिष्ठेम । संगच्छेमहि ॥

अयमु ते सरस्वति वसिष्ठो द्वारावृतस्य सुभगे व्यावः । वर्ध शुभ्रे स्तुवते रासि वाजान्यूयं पात स्वस्तिभिः सदा नः ॥ ६ ॥

अयं । ऊं इति । ते । सरस्वति । वसिष्ठः । द्वारौ । ऋतस्य । सुऽभगे । वि । आवरित्यावः ॥ वर्ध । शुभ्रे । स्तुवते । रासि । वाजान् । यूयं । पात । स्वस्तिऽभिः । सदा । नः ॥ ६ ॥

हे सुभगे शोभनधने सरस्वति अयं वसिष्ठस्ते त्वां यंतुर्ऋतस्य यज्ञस्य संबंधिन्यौ द्वारौ पूर्वापरे व्यावः विवृणोति । उ इति पूरकः । हे शुभ्रे शुभ्रवर्णे देवि वर्ध वर्धस्व । तथा स्तुवते स्तोत्रं कुर्वते वसिष्ठाय वाजानन्नानि रासि प्रदेहि । अन्यद्गतं ॥

---

(मं० ८ सू० २९.)

## २४.

बभ्रुरेको विषुणः सूनरो युवाञ्ज्यंक्ते हिरण्ययं ॥ १ ॥

बभ्रुः । एकः । विषुणः । सूनरः । युवा । अंजि । अंक्ते । हिरण्ययं ॥ १ ॥

अत्र दशानामृचां किंचित्पदलिंगात्पृथग्देवतं । अत्र प्रथमायां बभ्रुरित्यनेन सोमोऽभिधीयते । सोम्यं बभ्रुमालभेतेत्यादिषु दृष्टत्वात् । बभ्रुर्बभ्रुवर्णः सर्वलतादिषु परिपक्वः । यद्वा डुभृञ् धारणपोषणयोः । कुर्भ्रश्च । उ० १. २२. । इति कुप्रत्ययः । सर्वस्य सुधामयैः किरणैस्तावदुद्गते चंद्रमसि दुःखोपशमनानि पुष्टानि खलु । तादृशो विषुणो विष्वगंचनः सूनरः सुष्ठु रात्रीणां नेता । रात्रयश्चंद्रनेतृकाः खलु । एतादृशो युवा प्रतिदिवसमाविर्भूतत्वात्तरुण एको देवः सोमो हिरण्ययं हिरण्मयमंजि । अभिव्यज्यते प्रकाश्यतेऽनेनेत्यंज्याभरणं । अभिव्यक्तिसाधनं कुंडलमुकुटादिकं स्वशरीरमंक्ते अभिव्यंजयति ॥

**योनिमेक आ ससाद द्योतनोऽतर्देवेषु मेधिरः ॥ २ ॥**

योनिं । एकः । आ । ससाद । द्योतनः । अंतः । देवेषु । मेधिरः २

अत्र योनिमिति लिंगादग्निरुच्यते । अग्नये गृहपतय इत्यादिषु दृष्टत्वात् । देवेषु देवानामंतर्मध्ये द्योतनः स्वतेजसा दीप्यमानो मेधिरो मेधावी । अथवा मेधाकांक्षिणां स्तोतॄणां मेधादातृत्वेन मेधायुक्तः । एवंविध एकोऽग्निर्योनिं स्थानभूतमाहवनीयादिकमाससाद हविःस्वीकरणार्थमासीदति ॥

**वाशीमेको बिभर्ति हस्त आयसीमंतर्देवेषु निध्रुविः ॥ ३ ॥**

वाशीं । एकः । बिभर्ति । हस्ते । आयसीं । अंतः । देवेषु । निऽध्रुविः ॥ ३ ॥

देवेष्वंतर्देवानां मध्ये द्योतमानो निध्रुविर्निश्चले स्थाने वर्तमानः । यद्वा नितरां गमनमस्यास्तीति निध्रुविः सर्वदा गच्छन् । अथवा संग्रामेषु शत्रूणां पुरतोऽतिशयेन स्थैर्यवान् । एतादृश एकस्त्वष्टृनामको देव आयसीमयोमयधारां वाशीं । वाश्टशब्दे । शब्दयत्याक्रंदयति शत्रूननयेति वाशी तक्षणसाधनं कुठारः । तं स्वकीये हस्ते बिभर्ति धारयति ॥

**वज्रमेको बिभर्ति हस्त आहितं तेन वृत्राणि जिघ्नते ॥४॥**

वज्रं । एकः । बिभर्ति । हस्ते । आऽहितं । तेन । वृत्राणि । जिघ्नते ॥ ४ ॥

अत्र वज्रलिंगादिंद्रो देवता । एक इंद्र आहितं स्वकीयहस्ते निहितं वज्रमेतन्नामकमायुधं बिभर्ति धत्ते । स एवेंद्रस्तेन निहितेन वज्रेण वृत्राण्यावरकाणि रक्षांसि पापानि वा जिघ्नते भृशं हंति ॥

**तिग्ममेको बिभर्ति हस्त आयुधं शुचिरुग्रो जलाषभेषजः ॥ ५ ॥**

तिग्मं । एकः । बिभर्ति । हस्ते । आयुधं । शुचिः । उग्रः । जलाषऽभेषजः ॥ ५ ॥

अत्र जलाषभेषज इत्यनेन रुद्रोऽभिधीयते । शुचिः । शुच दीप्तौ । सर्वतः स्वतेजसा दीप्यमानः । यद्वा शुच शोके । शत्रूणां शोचयिता दुःखयिता अत एवोग्र उद्गूर्णबलो जलाषभेषजो रोगापनयनेन सुखकरभैषज्यवान् । यद्वा स्तोतॄणां दुःखरू-

पसंसारोच्छेदेन सुखकारिभिषग्रूपः । 'प्रथमो दैव्यो भिष'गित्यादिश्रुतिभिरस्य भिषक्त्वं श्रूयते । तादृश एको रुद्रस्तिग्मं तीक्ष्णधारमायुधं । आयुध्यति संप्रहरति शत्रूननेनेत्यायुधं पिनाकः तं स्वकीये हस्ते बिभर्ति ॥

पथ एकः पीपाय तस्करो यथाँ एष वेद निधीनां ॥ ६ ॥

पथः । एकः । पीपाय । तस्करः । यथा । एषः । वेद । निऽधीनां ६

पथ इति लिंगेन पूषा निगद्यते । सं पूषन्नध्वनस्तिर । ऋग्वे० १. ४२. १. । इत्यादिषु दृष्टत्वात् । एकः पूषनामको देवः पथो मार्गान् पीपाय । प्यायतिर्वर्धनकर्माप्यत्र रक्षणार्थः । येऽग्निहोत्रादि कर्म कुर्वंति तेषां स्वर्गमार्गं ये दुःकृतं कर्म कुर्वंति तेषां यातनामार्गं च रक्षति । उभयेषां मार्गविपर्ययो यथा न भवति तथा पालयतीत्यर्थः । एष सोऽयं पूषा निधीनां पृथिव्यां निहितानि धनानि वेद वेत्ति । ज्ञात्वा स्तोतॄणां तानि ददातीत्यर्थः । तत्र दृष्टांतः । तस्करो यथा । यथा चोरः पथि गच्छतां पुरुषाणां धनहरणार्थं मार्गं रक्षति तथा च स चोरो गृहे निहितानि ज्ञात्वा तदाहृत्य तस्य सहायेभ्यो यथा तानि ददाति तद्वत् ॥

त्रीण्येक उरुगायो वि चक्रमे यत्र देवासो मदंति ॥ ७ ॥

त्रीणि । एकः । उरुऽगायः । वि । चक्रमे । यत्र । देवासः । मदंति ॥ ७ ॥

उरुगायो विचक्रम इति पदलिंगाद्विष्णुरुच्यते । उरुगाय उरुभिर्बहुभिर्गातव्यः । यद्वा बहुषु देशेषु गंता बहुकीर्तिर्वा । सर्वान् शत्रून् स्वसामर्थ्येन शब्दयत्याक्रंदयतीति वोरुगायः । एतादृश एकोऽसहायो विष्णुस्त्रीणि पदानि भुवनानि विचक्रमे साधुपादेन विक्रांतवान् ॥ वेः पादविहरणे । पा० १. ३. ४१. । इति क्रमतेरात्मनेपदं । यत्र येषु लोकेषु देवास इंद्रादयो देवा मदंति यजमानदत्तैर्हविर्भिर्माद्यंति तानि विचक्रम इत्यन्वयः ॥

विभिर्द्वा चरत एकया सह प्र प्रवासेव वसतः ॥ ८ ॥

विऽभिः । द्वा । चरतः । एकया । सह । प्र । प्रवासाऽइंव । वसतः ॥ ८ ॥

एकया सहेति लिंगादश्विनावभिधीयते । द्वा द्वौ द्वित्वसंख्योपेतावश्विनौ विभिः । वी गत्यादिषु । क्विप् । छांदसो ह्रस्वः । गमनसाधनैरश्वैश्चरतः संचरेते । किंचेमावश्विनावेकया सूर्याख्यया ताभ्यां स्वयं वृतया स्त्रिया सह प्रवसतः प्रवासं सर्वत्र गमनं

कुरुतः । प्रवासे दृष्टांतः । प्रवासेव । यथा प्रवासिनौ द्वौ पुरुषावेकया स्त्रिया सह प्रवसतस्तद्वत् ॥

**सदो द्वा चक्राते उपमा दिवि सम्राजा सर्पिरासुती ॥९॥**

सदः । द्वा । चक्राते इति । उपऽमा । दिवि । संऽराजा । सर्पिरासुती इति सर्पिःऽआसुती ॥ ९ ॥

सम्राजाविति लिंगेन मित्रावरुणावभिधीयेते उपमोपमौ परस्परं स्वकांत्योपमानभूतौ । यद्वोपमीयत आभ्यां सर्वमित्युपमौ । सर्वस्य एतावेव सम्राजा सम्राजौ सम्यग्दीप्यमानौ सर्पिरासुती सर्पिर्घृतमाभ्यामासूयत इति सर्पिरासुती । घृतहविष्कौ द्वा द्वौ मित्रावरुणौ दिवि द्युलोके सदः सीदंत्यत्रेति सदः स्थानं तच्चक्राते अकार्ष्टां ॥

**अर्चंत एके महि साम मन्वत तेन सूर्यमरोचयन् ॥१०॥**

अर्चंतः । एके । महि । साम । मन्वत । तेन । सूर्यं । अरोचयन् १०

एकेऽत्रयो महि महत्साम त्रिवृत्पंचदशादि मन्वत । तदेवार्चंतः पूजयंत एतादृशा अत्रयस्तेनोक्तेन साम्ना सूर्यमरोचयन् अदीपयन् । त एवात्र देवता ॥

---

## (मं० १० सू० ७२.)

# २५.

**देवानां नु वयं जाना प्र वोचाम विपन्यया । उक्थेषु शस्यमानेषु यः पश्यादुत्तरे युगे ॥ १ ॥**

देवानां । नु । वयं । जाना । प्र । वोचाम । विपन्यया ॥ उक्थेषु । शस्यमानेषु । यः । पश्यात् । उत्ऽतरे । युगे ॥ १ ॥

अदितिर्दाक्षायण्यनेन सूक्तेन स्वयं यथादित्यानजनयत्तद्ब्रवीति । बृहस्पत्यृषिपक्षे स ऋषिरदितेः सकाशादादित्योत्पत्तिप्रकारमाह । वयं देवानामादित्यानां जाना जन्मानि प्रवोचाम प्रकथयाम । विपन्यया विस्पष्टया वाचा । वयमिति वोचामेति चोभयत्र पूजार्थं बहुवचनं । अथैकवदाह । यो देवानां गणः पूर्वे युग उत्पन्नोऽप्युक्थेषु शस्यमानेषु यागे शस्त्रेष्वनुष्ठीयमानेषूत्तरे युगे वर्तमानं स्तुवंतं स्तोतारं पश्यात् पश्यति । अनेकेष्वपि युगेषु गतेषु कर्मसु स्तूयमानो वर्तत इत्यर्थः ॥

ब्रह्मणस्पतिरेता सं कर्मार इवाधमत्। देवानां पूर्व्ये युगेऽसतः। सदजायत ॥ २ ॥

ब्रह्मणः। पतिः। एता। सं। कर्मारःऽइव। अधमत्॥ देवानां। पूर्व्ये। युगे। असतः। सत्। अजायत ॥ २ ॥

ब्रह्मणोऽन्नस्य पतिरदितिरेतैतानि देवानां जन्मानि कर्मार इव स यथा भस्त्रयाग्निमुपधमति प्रज्वलनार्थमेवं समधमत्। उदपादयदित्यर्थः। देवानां पूर्व्ये युगे आदिसृष्टावित्यर्थः। तेषामुपादानकारणादसतो नामरूपवर्जितत्वेनात्समानाद्ब्रह्मणः सकाशात्सन्नामरूपविशिष्टं देवादिकमजातय प्रादुरभूत्॥ असद्वा इदमग्र आसीत्ततो वै सदजायतेति हि श्रुतिः। न सदात्मकस्य प्रपंचस्यासत्कारणत्वं युक्तमिति वाच्यं छंदोगैः कथमसतः सज्जायेतेत्यसत्कारणत्वमाक्षिप्य सदेव सोम्येदमग्र आसीदित्यवधारितत्वात्। छां० उ० ६. २.। तर्ह्यसत्कारणप्रतिपादकवाक्यानां का गतिरिति चेत् तेषामव्याकृतत्वाभिप्रायत्वात् 'तद्धेदं तर्ह्यव्याकृतमासी'दिति श्रुतेः। यद्येवं तर्ह्यदितेः सकाशात्कथं देवाद्युत्पत्तिः। वायोरग्निरित्यादिवत् अधिष्ठानसकाशादुत्पत्तेः। यद्वा देवानां कारणभूतं सदसतो ब्रह्मणः सकाशादुत्पन्नमिति योजनादुक्तन्यायोऽस्मिन्पक्षेऽपि समान एव॥

देवानां युगे प्रथमेऽसतः सदजायत। तदाशा अन्वजायंत तदुत्तानपदस्परि ॥ ३ ॥

देवानां। युगे। प्रथमे। असतः। सत्। अजायत॥ तत्। आशाः। अनु। अजायंत। तत्। उत्तानऽपदः। परि ॥ ३ ॥

पूर्वार्धमुक्तं। तदन्वाशा दिशोऽजायंत। तत्परि तदन्वित्यर्थः। उत्तानपदः उत्तानमूर्ध्वतानं पद्यंत इत्युत्तानपदो वृक्षाः। तेऽजायंत प्रादुरभवन्॥

भूर्जज्ञ उत्तानपदो भुव आशा अजायंत। अदितेर्दक्षो अजायत दक्षाद्वदितिः परि ॥ ४ ॥

भूः। जज्ञे। उत्तानऽपदः। भुवः। आशाः। अजायंत॥ अदितेः। दक्षः। अजायत। दक्षात्। ऊं इति। अदितिः। परि ॥ ४ ॥

भूरुत्तानपदो वृक्षाज्जज्ञे। तथा भुवः सकाशादाशा अजायंत। तथादितेर्दक्षोऽजायत उत्पन्नः। दक्षादु दक्षादप्यदितिः पर्यजायत। न स्वोत्पन्नं कार्यं स्वस्यैव कारणमपि भवतीति विप्रतिषिद्धमिति वाच्यं। यास्काचार्य इदमेव वाक्यमुदाहृत्य विरो-

धमाशंक्य पर्यपहरत्। तथा हि अदितेर्दक्षो अजायत दक्षाद्वदितिः परीति च तत्कथमुपपद्येत। समानजन्मानौ स्यातामित्यपि वा देवधर्मेणेतरेतरजन्मानौ स्यातामितरेतरप्रकृति। नि० ११. २३.। इति ॥

अदितिर्ह्यजनिष्ट दक्ष या दुहिता तव। तां देवा अन्वजायंत भद्रा अमृतबंधवः ॥ ५ ॥

अदितिः। हि। अजनिष्ट। दक्ष। या। दुहिता। तव ॥ तां। देवाः। अनु। अजायंत। भद्राः। अमृतऽबंधवः ॥ ५ ॥

हे दक्ष तव या दुहिताभूत्सादितिरजनिष्ट हि पुत्रानादित्यान्। तदेवाह। तां देवा अन्वजायंत भद्राः स्तुत्या भजनीया अमृतबंधवोऽमरणबंधनाः ॥

यद्देवा अदः सलिले सुसंरब्धा अतिष्ठत। अत्रा वो नृत्यतामिव तीव्रो रेणुरपायत ॥ ६ ॥

यत्। देवाः। अदः। सलिले। सुऽसंरब्धाः। अतिष्ठत ॥ अत्र। वः। नृत्यतांऽइव। तीव्रः। रेणुः। अप। आयत ॥ ६ ॥

अनयोत्तरेण चादित्याः स्तूयंते। यद्यदा हे देवा अदोऽमुष्मिन्सलिले यूयं सुसंरब्धाः सुष्ठु लब्धात्मानोऽतिष्ठत स्थितवंतः। आपो वा इदं सर्वमप एव ससर्जादाविति श्रुतिस्मृती। अत्रास्मिन्सलिले नृत्यतामिव वो युष्माकं संबंधी तीव्रो दुःसहो रेणुरंशभूत एकोऽपायत अपागच्छत्। दिवं प्रति गत इति सूर्याभिप्रायं। परा मार्तांडमास्यदिति वक्ष्यति ॥

यद्देवा यतयो यथा भुवनान्यपिन्वत। अत्रा समुद्र आ गूळ्हमा सूर्यमजभर्तन ॥ ७ ॥

यत्। देवाः। यतयः। यथा। भुवनानि। अपिन्वत ॥ अत्र। समुद्रे। आ। गूळ्हं। आ। सूर्यं। अजभर्तन ॥ ७ ॥

यद्यदा हे देवाः यतयो यथा। वृष्ट्या नियमयंतीति वा वर्षणेन यातयंतीति वा यतयो मेघाः। ते यथोदकैर्भुवनानि लोकं पूरयंति तद्वत्स्वतेजोभिरपिन्वत पूरितवंतोऽत्र समुद्रेऽप्स्वा गूळ्हं निगूळ्हं सूर्यं प्रातरुदयायाजभर्तन आहृतवंतः ॥

अष्टौ पुत्रासो अदितेर्ये जातास्तन्व१स्परि। देवाँ उप प्रैत्सप्तभिः परा मार्तांडमास्यत् ॥ ८ ॥

अष्टौ। पुत्रासः। अदितेः। ये। जाताः। तन्वः। परि॥ देवान्। उप। प्र। ऐत्। सप्तऽभिः। परा। मार्तांडं। आस्यत्॥ ८॥

अष्टौ पुत्रासः पुत्रा मित्रादयोऽदितेर्भवंति। येऽदितेस्तन्वः परि शरीराज्जाता उत्पन्नाः। अदितेरष्टौ पुत्रा अध्वर्युब्राह्मणे परिगणिताः। तथा हि। ताननुक्रमिष्यामो मित्रश्च वरुणश्च धाता चार्यमा चांशश्च भगश्च विवस्वानादित्यश्चेति। तथा तत्रैव प्रदेशांतरेऽदितिं प्रस्तुत्याम्नातं। तस्या उच्छेषणमदधुस्तत्प्राश्नात् सा रेतोऽधत्त तस्यै चत्वार आदित्या अजायंत सा द्वितीयमपचदित्यष्टानामादित्यानामुत्पत्तिर्वर्णिता। तै० सं० ६. ५. ६. १.। सादितिः सप्तभिः पुत्रैर्देवानुपप्रैत् उपागच्छत्। अष्टमं पुत्रं मार्तांडं सूर्यं परास्यत् उपरि प्राक्षिपदित्यर्थः॥

सप्तभिः पुत्रैरदितिरुप प्रैत्पूर्व्यं युगं। प्रजायै मृत्यवे त्वत्पुनर्मार्तांडमाभरत्॥ ९॥

सप्तऽभिः। पुत्रैः। अदितिः। उप। प्र। ऐत्। पूर्व्यं। युगं॥ प्रऽजायै। मृत्यवे। त्वत्। पुनः। मार्तांडं। आ। अभरत्॥ ९॥

पूर्वमंत्रोक्त एवार्थः पुनरत्रोच्यते सप्तभिर्मार्तांडव्यतिरिक्तैर्मित्रादिभिरदितिः पूर्व्यं पुराणं युगमुपप्रैत् उपगता। अथ प्रजायै प्राणिनामुत्पत्तये मृत्यवे तेषां मरणाय मार्तांडं। मृताद्वृद्धादंडाज्जातं मार्तांडनामानं सूर्यं पुनराभरत् आहरत् द्युलोकेऽधारयत्। प्राणिमरणजननादीनां सूर्योदयास्तमयायत्तता स्फुटा। तस्यै व्यृद्धमांडमजायतेत्यादि ब्राह्मणं। तै० सं० ६. ५. ६. १.॥

---

(मं० १० सू० १०८.)

## २६.

किमिच्छंती सरमा प्रेदमानड् दूरे ह्यध्वा जगुरिः पराचैः। कास्मेहितिः का परितक्म्यासीत्कथं रसाया अतरः पयांसि १

किं। इच्छंती। सरमा। प्र। इदं। आनट्। दूरे। हि। अध्वा। जगुरिः। पराचैः॥ का। अस्मेऽहितिः। का। परिऽतक्म्या। आसीत्। कथं। रसायाः। अतरः। पयांसि॥ १॥

अनयागच्छंतीं सरमां दृष्ट्वा पणयो वदंति । सरमा सरणशीलैतन्नामिका देवशुनी किमिच्छंती किं प्रार्थयमाना सतीदमस्मदीयं स्थानं प्रानट् प्राप्नोत् । आङ्पूर्वो नशिर्व्याप्तिकर्मा । तस्य लुङि मंत्रे घसेत्यादिना च्लेर्लुक् । छंदस्यपि दृश्यत इत्याडागमः । पराचैः परांचि पराङ्मुखान्यावृत्तिवर्जितानि यानि गमनानि तैर्जगुरिरुद्गूर्णः । महता प्रयत्नेनापि गंतुं न शक्यत इत्यर्थः । गॄ निगरणे । आदृगमहनेत्यादिना किन्प्रत्ययः । बहुलं छंदसि । पा० ७. १. १०३. । इत्युत्वं । तादृशोऽमध्वा दूरे हि विप्रकृष्टः खलु । यद्वा । पराचैः परांचनैर्जगुरिरत्यर्थं गंत्री पार्ष्णिभागमनालोकमाना सतीदं स्थानं प्राप्नोति । दूरेऽयमध्वा यदृच्छया गंतुं न शक्यते । अतो वयमेतां पृच्छामः । हे सरमे का कीदृश्यस्मेहितिः कोऽस्मास्वर्थहितिः । कोऽस्मासु त्वदपेक्षितार्थो निहितः । यद्वा । अस्मासु कोऽर्थो गतः । दधातेर्हिनोतेर्वा क्तिनि रूपं । आगच्छंत्यास्तव का कीदृशी परितक्म्या रात्रीरासीत् । यद्वा तकतिर्गत्यर्थः । परितकनं परितो गमनं भ्रमणं वा कीदृशमासीत् । कथं च रसायाः शब्दायमानाया अंतरिक्षनद्या योजनशतविस्तीर्णायाः पयांस्युदकान्यतरः तीर्णवत्यसि एतद्वद । अत्र किमिच्छंती सरमेदं प्रानडित्यादिकं निरुक्तं द्रष्टव्यं ॥

**इंद्र॑स्य दू॒तीरि॑षि॒ता च॑रामि म॒ह इ॒च्छंती॑ पणयो नि॒धीन्वः॑ । अ॒ति॒ष्कदो॑ भि॒यसा॒ तन्न॑ आव॒त्तथा॑ र॒साया॑ अत॒रं प॒यांसि ॥ २ ॥**

इंद्र॑स्य । दू॒तीः । इ॒षि॒ता । च॒रा॒मि॒ । म॒हः । इ॒च्छंती॑ । प॒ण॒यः॒ । नि॒ऽधीन् । व॒ः ॥ अ॒ति॒ऽस्कदः॑ । भि॒यसा॑ । तत् । न॒ः । आ॒व॒त् ॥ तथा॑ । र॒साया॑ः । अ॒त॒रं॒ । प॒यांसि ॥ २ ॥

अनया तान्सरमा प्रत्युवाच । हे पणय एतन्नामका असुरा इंद्रस्य दूतीः । सुपां सुलुगिति प्रथमैकवचनस्य सुश्छांदसः । अहमिषिता तेनैव प्रेषिता सती चरामि युष्मदीयं स्थानमागच्छामि । किमर्थं । वो युष्मदीयान्युष्मदीये पर्वतेऽधिष्ठापितान्मह्ो महतो निधीन्बृहस्पतेर्गोनिधीनिच्छंती कामयमाना सती चरामि । किंच । अतिष्कदः । स्कंदिर्गतिशोषणयोः । भावे क्विप् । अतिष्कंदनादतिक्रमणाज्जातेन भियसा भयेन तन्नदीजलं नः । पूजायां बहुवचनं । मा मावत् अरक्षत् । तथा तेन प्रकारेण रसाया नद्याः पयांस्युदकान्यतरं तीर्णवत्यस्मि ॥

**कीदृङ्ङिंद्रः॑ सरमे॒ का दृ॑शी॒का यस्ये॒दं दू॒तीरस॑रः परा॒कात् । आ च॒ गच्छा॑न्मि॒त्रमे॑ना दधा॒माथा॒ गवां॒ गोप॑तिर्नो भवाति ॥ ३ ॥**

कीदृङ् । इंद्रः । सरमे । का । दृशीका । यस्य । इदं । दूतीः । असरः । पराकात् ॥ आ । च । गच्छात् । मित्रं । एन । दधाम । अथ । गवां । गोऽपतिः । नः । भवाति ॥ ३ ॥

तेषां वाक्यं । हे सरमे तव स्वामींद्रः कीदृक् कियत्पराक्रमवान् । का दृशीका तस्य कीदृशी दृष्टिः । दृष्टिरूपा सेना कियती । यस्य दूतीर्दूती त्वमिदमस्मदीयं स्थानं पराकादतिदूरादसरः आगमः । इति तामुक्त्वेदानीं ते परस्परमाहुः । एषा सरमा गच्छाच्च आगच्छतु च । गमेर्लेट्याडागमः । स्वामी भवाति भवतु । न ह्येकस्या गोः किंतु बहूनां गवां स्वामी भवतु । वृत्त्यवृत्तिभ्यां स्वामित्वं बाहुल्यं च विवक्ष्यते ॥

नाहं तं वेद दभ्यं दभत्स यस्येदं दूतीरसरं पराकात् । न तं गूहंति स्रवतो गभीरा हता इंद्रेण पणयः शयध्वे ॥४॥

न । अहं । तं । वेद । दभ्यं । दभत् । सः । यस्य । इदं । दूतीः । असरं । पराकात् ॥ न । तं । गूहंति । स्रवतः । गभीराः । हताः । इंद्रेण । पणयः । शयध्वे ॥ ४ ॥

सरमा वदति । हे पणयः तमिंद्रं दभ्यं हंतव्यमिति न वेद न जानामि । दभेरचोयत् । कथं । स इंद्रो दभत् सर्वाञ्जनान्दभति हिनस्त्येव । दभेर्लेटि रूपं । वाक्यभेदादनिघातः । यस्य दूतीर्दूत्यहमिदं युष्मदीयं स्थानं पराकादतिदूराद्देशादसरं प्राप्ताभूवं । इंद्रो हिंसितव्यो न भवतीत्यत्र युक्तिमाह । स्रवतः स्रवणं स्रवः तमाचरंति । आचारार्थे क्विप् । तुगागमः । जसि रूपं । स्रवणशीला गभीरा गंभीरा नद्यस्तमिंद्रं न गूहंति न संवृण्वंति नाच्छादयंति । किं त्वाविष्कुर्वंति । वयं यस्य महिम्ना समुद्रं प्रतिसरामः । तस्मादहिंस्य इत्येनं प्रकटीकुर्वंति । गुहू संवरणे । भौवादिकः । तस्माद्धे पणयो यूयमिंद्रेण तादृशपराक्रमेण हताः संतः शयध्वे । शीङ् स्वप्ने । बहुलं छंदसीति शपो लुगभावः ॥

इमा गावः सरमे या ऐच्छः परि दिवो अंतान्त्सुभगे पतंती । कस्त एना अव सृजादयुध्व्युतास्माकमायुधा संति तिग्मा ॥ ५ ॥

इमाः । गावः । सरमे । याः । ऐच्छः । परि । दिवः । अंतान् । सुऽभगे । पतंती ॥ कः । ते । एनाः । अव । सृजात् । अयुध्वी । उत । अस्माकं । आयुधा । संति । तिग्मा ॥ ५ ॥

क्रुद्धाः पणयः प्रच्यूचुः । हे सुभगे शोभनसौभाग्यवति हे सरमे दिवो द्युलोकांतान्पर्यंतान्परि पतंती कुत्र गावस्तिष्ठंतीति परितो गच्छंती त्वमिमाः परिदृश्यमाना गावः । सुब्व्यत्ययः । गा ऐच्छः कामयसे ता एना गास्ते त्वदीयः कोऽयुध्व्ययुावसृजात् अस्मात्पर्वतादवसृजेत् विनिर्गमयेत् । सृजेर्लेटि रूपं । अयुध्वी युधेः वाप्रत्यये स्नात्व्यादयश्चेति निपातितः । नञ्समासत्वाल्ल्यबादेशाभावः । नञः प्रकृस्वरत्वं । उतापि च । अस्माकं तिग्मा तिक्ष्णान्यायुधायुधानि संति तस्मादस्मार्युद्धमकृत्वा को नाम गा आहरति ॥

**असे॒न्या वः॑ पणयो॒ वचां॑स्यनिष॒व्यास्त॒न्वः॑ संतु पा॒पीः ।**
**अधृ॑ष्टो व॒ एत॒वा अ॑स्तु॒ पंथा॒ बृह॒स्पति॑र्व उभ॒या न मृ॑ळात् ॥६॥**

अ॒से॒न्याः । वः॒ । प॒ण॒यः॒ । वचां॑सि । अ॒नि॒ष॒व्याः । त॒न्वः॑ । सं॒तु । पा॒पीः ॥ अधृ॑ष्टः । वः॒ । एत॒वै । अ॒स्तु॒ । पंथाः॑ । बृह॒स्पतिः॑ । वः॒ । उ॒भ॒या । न । मृ॒ळा॒त् ॥ ६ ॥

सा तान्निराह । हे पणयो वो युष्माकं वचांसि पूर्वोक्तानि वचनान्यसेन्याऽसेन्यानि सेनार्हाणि न भवंति । सेनाशब्दात्तदर्हतीत्यर्थे छंदसि चेति यत्प्रत्ययः । नञा समासः । ययतोश्चातदर्थ इत्युत्तरपदांतोदात्तत्वं । तथा तन्वो युष्मदीयानि शरीराण्यनिषव्या इष्वर्हाणि न संतु पराक्रमराहित्येन । पूर्ववत्प्रत्ययः । ओर्गुण इति गुणः । स्वरश्च तादृक् । यतः पापीः पापयुक्तानि खलु । छंदसीवनिपावितीप्रत्ययः । जसः शः । किंच । वो युष्मदीयः पंथा मार्ग एतवै गंतुमधृष्टोऽसमर्थोऽस्तु । इण् गतावित्यस्य तुमर्थे तवैप्रत्ययः तवै चांतश्च युगपदिति धातोः प्रत्ययांतस्य च युगपदुदात्तत्वं । तत्र हेतुमाह । वो युष्मदीयानुभयोभयविधान्पूर्वोक्तांस्तन्वो देहान्बृहस्पतिरिंद्रप्रेरितो न मृळात् न सुखयतु किंतु बाधेत । मृड सुखने । लेट्यडागमः ॥

**अ॒यं नि॒धिः स॑रमे॒ अद्रि॑बुध्नो॒ गोभि॒रश्वे॑भि॒र्वसु॑भि॒न्यृ॑ष्टः ।**
**रक्षं॑ति॒ तं प॒णयो॒ ये सु॑गो॒पा रेकु॑ प॒दमल॑कु॒मा ज॑गंथ ॥ ७ ॥**

अ॒यं । नि॒ऽधिः । स॒र॒मे॒ । अद्रि॑ऽबुध्नः । गोभिः॑ । अश्वे॑भिः । वसु॑ऽभिः । निऽऋ॑ष्टः ॥ रक्षं॑ति । तं । प॒णयः॑ । ये । सु॒ऽगो॒पाः । रेकु॑ । प॒दं । अल॑कं । आ । ज॒गं॒थ ॥ ७ ॥

ते पुनराहुः । हे सरमे अयं निधिरस्मदीयः कोशोऽद्रिबुध्नः । बंध बंधने । बंधेर्ब्रधिबुधी चेति नप्रत्ययः । बुध इत्यादेशः । अद्रिर्बंधको यस्य तादृशः । तथा हृतैर्गोभिरश्वैभिरश्वैश्च वसुभिरात्मीयैर्धनैश्च न्यृष्टो नितरां प्राप्तो भवति । ऋषी गतौ । क्तप्र-

त्यये श्वीदितो निष्ठायामितीट्प्रतिषेधः। गतिरनंतर इति गतेः प्रतिस्वरत्वं। सुगोपाः गुपू रक्षणे आयप्रत्ययांतात्क्विप्यातोलोपयलोपौ। सुष्ठु गोपायितारो ये पणयस्तेऽसुरास्तं निधिं रक्षंति पालयंति। रेकु। रेकृ शंकायां। औणादिक उप्रत्ययः। शंकितं गोभिः शब्दायमानं पदमस्माभिः पालितं स्थानमलकं व्यर्थमेवाजगंथ आगतवत्यसि। गमेर्लिटि रूपं॥

एह गमन्नृषयः सोमशिता अयास्यो अंगिरसो नवग्वाः।
त एतमूर्वं वि भजंत गोनामथैतद्वचः पणयो वमन्नित्॥८॥

आ। इह। गमन्। ऋषयः। सोमऽशिताः। अयास्यः। अंगिरसः। नवऽग्वाः॥ ते। एतं। ऊर्वं। वि। भजंत। गोनां। अथ। एतत्। वचः। पणयः। वमन्। इत्॥ ८॥

सरमा पुनः प्रत्युवाच। हे पणयः सोमशिताः सोमेन तीक्ष्णीकृताः सोमपानेन मत्ताः। शिञ् निशाने। कर्मणि क्तप्रत्ययः। तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरत्वं। तादृशा नवग्वा नवगतयः। यद्वा। अंगिरसां सत्रमासीनानां मध्ये केचन नवसु गाः स्वध्यतिष्ठन् ते नवग्वाः। अनेन दशग्वा अप्युपलक्ष्यंते। उभयविधास्तेंऽगिरस ऋषयः। तेषां प्रथमोऽयास्य एतन्नामा च। त एत इह युष्मदीये स्थान आ गमन् आगच्छेयुः। गमेश्छंदसि लुङ्लङ्लिट इति सार्वकालिको लुङ्। लृदित्त्वाच्छेरङ्। आगत्य च ते गोनां। गोः पादांत इति छंदसि नुडागमः। गवामूर्वं तं समूहं विभजंत विभागं कुर्युः। अत्रापि पूर्ववत्सार्वकालिको लुङ्। अथानंतरं पणयो यूयमेतद्वचः पूर्वं यद्यर्थमागतासीति यद्वाक्यमवोचत तद्वाक्यं तदा वमन्निद्वमंतः परित्यजंत एव भवथ। वमु उद्गिरणे। शतरि सुपां सुलुगिति जसो लुक्। नुमागमः। संयोगांतस्य लोपः। यद्वा लङि रूपं स्वरश्छांदसः॥

एवा च त्वं सरम आजगंथ प्रबाधिता सहसा दैव्येन।
स्वसारं त्वा कृणवै मा पुनर्गा अप ते गवां सुभगे भजाम ९

एव। च। त्वं। सरमे। आऽजगंथ। प्रऽबाधिता। सहसा। दैव्येन॥ स्वसारं। त्वा। कृणवै। मा। पुनः। गाः। अप। ते। गवां। सुऽभगे। भजाम॥ ९॥

तथैवमुक्ते सति पणयः प्रणयवाक्यमाहुः। हे सरमे त्वं दैव्येन देवसंबंधिना सहसा बलेन प्रबाधिता यथा तथा वलपुरं प्राप्य तत्र स्थिता गा दृष्ट्वा पुनरागच्छेति तेन

